प्रमेह॥मूत्रदोषस्तुविज्ञेयःप्रमेहोमेहइत्यपि॥मूत्रकृच्छ्र॥कृच्छ्रं
तुमूत्रकृच्छ्रंस्यान्मूत्ररोधोऽश्मरीचसा॥१९॥वातव्याधि॥वातव्याधि
श्चलातंकोवातरोगोऽनिलामयः॥कंपस्तुवेपनंवेपःकंपनंवेपथुस्त
था॥२०॥आग॥जृंभातुजृंभिकाजिंभाजिंभिकाजृंभिणीचसा॥आ
लस्यंमंदतामांद्यंकार्यप्रद्वेषइत्यपि॥२१॥तुंदःस्यांविष्ठइत्युक्तोज
ठरघ्नोजलोदरः॥आम॥आमोमलस्यवैषम्याद्रक्तार्त्तिःशोणितीा
मयः॥२२॥ज्वालागर्दभकःप्रोक्तोज्वालारासभकामयः॥ज्वालाख
रगदोज्ञेयःसगर्दभगदस्तथा॥२३॥ज्वालागर्दभः॥विद्रधिःस्या
द्विदरणंहृद्ग्रंथिर्हृद्व्रणश्चसः॥विद्रधि॥व्रणोभगप्रदेशेयःसभ
गंदरनामकः॥२४॥भगंदरः॥शिरःशूलादयोज्ञेयास्तत्तदंगाभि
धानकाः॥इत्थमन्येपिबोद्धव्याभिषग्भिर्देहतोगदाः॥२५॥ताप॥
संतापःसंज्वरस्तापःशोषऊष्माचकथ्यते॥यश्चापिकोष्ठसंतापः
सोंतर्दाहइतिस्मृतः॥२६॥दाह॥सदाहोमुखताल्वोष्ठेदवथुश्चसु
रादिषु॥पाणिपादांसमूलेषुशाखापित्तंतदुच्यते॥२७॥तंद्रा॥तंद्रा
तुविषयाज्ञानंप्रमीलातंद्रिकाचसा॥लज्जा॥प्रायशस्त्विंद्रियस्वाप
श्चेष्टानाशःप्रलीनता॥उन्मादोमतिविभ्रांतिरुन्मनायित्तमित्यपि॥
॥२८॥आवेशोभूतसंचारोभूतिक्रांतिर्ग्रहागमः॥अपस्मार॥अप
स्मारोंगविकृतिर्लोलांगोभूतविक्रिया॥२९॥स्तैमित्यंजडताजाड्यं
शीतलत्वमपाटवं॥साधारणव्याधिनाम॥वातिकोवातजोव्याधिः
पैत्तिकःपित्तसंभवः॥श्लैष्मिकःश्लेष्मसंभूतःसमूहःसांनिपातिकः
॥३०॥इतिगदाः॥व्याधितोविकृतोग्लाष्णुर्ग्लानोमंदस्तथातुरः॥अ
भ्यांतोभ्यामितोरुग्णश्चामयाव्यपटुश्चसः॥३१॥रोगीसाधारणनाम
॥तद्विशेषास्तुविज्ञेयास्तन्मत्वाकार्ययोगतः॥यथाज्वरितकंडूलवा
तकर्षसदद्रुणां॥३२॥उत्साहीद्विजदेवभेषजभिषग्भक्तोतिपथ्येर
तोधीरोधर्मपरायणःप्रियवचोमानीमृदुर्मानदः॥विश्वासीकृतज्ञा
स्तिकःसुचरितोदातादयालुःशुचिर्यस्मात्कामममवंचकःसविकृतो
मुच्येतमृत्योरपि॥३३॥चिकित्सा॥उपचारास्तूपचर्याचिकित्सारुक्प्र
तिक्रिया॥निग्रहोवेदनानिष्ठाक्रियाचोपक्रमश्रमाः॥३४॥औषधं॥

भैषज्यंभेषजंजैत्रमगदोजायुरौषधं॥आयुर्योगोगदारातिरमृतं
चतदुच्यते॥३५॥रसादियोगलक्षणं॥तच्चपंचविधंप्रोक्तंस्वस्वयो
गविशेषतः॥रसश्चूर्णंकषायश्चावलेहःकल्कइत्यपि॥३६॥रसो
दृषदिसंभिन्नद्रवद्रव्यसमन्वितः॥चूर्णंतुवस्तुभिःसुष्कैःकषायः
क्वथितैस्तुतैः॥३७॥तैःपक्वैरवलेहःस्यात्कल्कोमध्वादिमर्दितैः॥
क्वाथःसप्तविधःप्रोक्तस्तेषांनामचलक्षणं॥३८॥पाचनःशोधनीय
श्चक्लेदनश्चसमस्तथा॥दीपनस्तर्पणःशोषइतिसप्तविधाःस्मृताः
॥३९॥पाचनोर्धावशेषश्चशोधनोद्वादशांशकः॥क्लेदनश्चतुरंशस्तु
समश्चाष्टांशकोमतः॥४०॥दीपनस्तुखंडशश्चतर्पणःपंचमांश
कः॥विशोषःशोडशांशश्चक्वाथभेदाइतीरिताः॥४१॥इत्येतच्छा
स्त्रतोज्ञात्वायथायोग्यंप्रयोजयेत्॥एतद्विशेषतोनोक्तंग्रंथबा
हुल्यतोमया॥४२॥ज्ञेयंरसादिकथनादनंतरंकिलानुपानंकथ
यंतिसूरयः॥विलंव्यचक्रामणमेतदीरितंरात्रौपुनःपाचनमेत
दूचिरे॥४३॥आत्मनीनंतुपथ्यंस्यादायुष्यंचहितंचतत्॥पाटवंकि
लमारोग्यमगदंस्यादनामयं॥४४॥कल्यस्तुपटुरुल्लाघोनिरातंको
निरामयः॥अगदोनीरुजोनीरुक्तरंकश्चकथ्यते॥४५॥वैद्यःश्रे
ष्ठःगदंकारोरोगहारीभिषग्विधिः॥रोगज्ञोजीवनोविद्वान्आ
युर्वेदीचिकित्सकः॥४६॥विप्रोवैद्यकपारगःशुचिरनूचानःकु
लीनःकृतीधीरःकालकलाविदास्तिकमतिर्दक्षःसुधीर्धार्मिकः॥
स्वाचारःसमदृग्दयालुरखलोयःसिद्धमंत्रक्रमःशांतःकाममलो
लुपःकृतयशावैद्यःसविद्योततेः॥४७॥अधीरःकर्कशःस्तब्धःसरो
गीनित्यशिक्षकः॥पंचवैद्यानपूज्यंतेधन्वंतरिसमाअपि॥४८॥पुम
र्थाश्चत्वारःखलुकरणसौख्यैकसुभगास्तदेतद्वैषज्यानवरतनिषे
वे
नपरमुपकर्त्तारममृतं॥४९
जोद्यातश्रीयैसंगररंगसद्मनियथासंविभ्रते
धयस्तथासमुदिताःसिध्यंतिवीर्याधिकाविप्रो
मितिश्रुत्यापिसत्यापितं॥५०॥पतध

लादिकतत्ववेदिना॥यथायथंचौषधयोगुणोत्तराःप्रत्याहरंतेयमगो
चरानपि॥५१॥येनत्वांखननेब्रह्मायेनत्वांखननेभृगुः॥येनेंद्रोयेन
वरुणोह्युपचक्रमकेशवः॥५२॥तेनाहंत्वांखनिष्यामिसिद्धिंकुरुम
हौषधि॥विप्रःपठन्निमंमंत्रंप्रयत्नात्मामहौषधीं॥खात्वाखादिरकी
लेनयथावत्तांप्रयोजयेत्॥५३॥वीर्यंप्रकाश्यनिजमौषधयःकिलोचुरन्यो
न्यमुर्वपिदिवोभुवमाव्रजंत्यः॥जीवंतुमूर्छमपियंहिवयंमहिम्नासे
नस्तुवीमहिसजात्वपिनैवनश्येत्॥५४॥प्रत्यापिताःप्रमुदितामुदि
तेनराज्ञासोमेनसाकमिदमौषधयःसमूचुः॥यस्मैद्विजोदिशतिभे
षजमाशुराजन्तंपालयामइतिचश्रुतिराहसाक्षात्॥५५॥इतिश्रु
तिवाक्यं॥आसामीशोलिखितपठितःसद्विजानांहिराजासिद्धैर्या
श्चद्विजमहर्जिनंस्वाश्रयंकामयंते॥तास्तेवान्यःप्रसरतिमदाद्यस्तु
जात्याचगत्याहीनःशून्योजगतिकुपिताःपातयंत्येनमेताः॥५६॥द्र
व्याभिधानगतिनिश्चयकायसौख्यशल्यादिभूतविषनिग्रहबालवै
द्यं॥विंद्याद्रसायनवरंदृढदेहकारीमायुस्ततेर्द्विचतुरंगमिहाहशं
भुः॥५७॥अन्यच्च॥अष्टांगंशल्यशालाक्यकायभूतविषंतथा॥बालो
रसायनंवृष्यमिदंकैश्चिदुदाहृतं॥५८॥इत्यष्टांग॥अष्टांगज्ञःसुवै
द्योहिविपद्यातोयथारथः॥अंगहीनःसविज्ञेयोनश्लाघ्योराजमंदि
रे॥५९॥प्राज्ञोविज्ञःपंडितोदीर्घदर्शीधीरोधीमान्कोविदोलब्धवर्णः॥
दोषज्ञःसन्दूरदर्शीमनीषीमेधावीज्ञःसूरिविज्ञोविपश्चित्॥६०॥वै
ज्ञानिकःकृतमुखःसंधा वान्मतिमान्कृती॥कुशाग्रीयमतिःकृष्टिःकु
शलोविदुरोबुधः॥६१॥विख्यातःशिक्षितोदक्षःसुदीक्षःकृतधीसु
धीः॥अभिज्ञोनिपुणोविद्वान्कृतकर्माविचक्षणः॥६२॥विदग्ध
श्चतुरश्चैवप्रौढोबोधविशारदः॥सुमेधाःसुमतिस्तीक्ष्णःप्रेक्षावा
न्विबुधोविदन्॥६३॥बुद्धि॥मनीषाधिषणाप्रज्ञाधारणाशेमुषी
मतिः॥धीबुद्धिःप्रतिपत्प्रज्ञाप्रतिपत्तिश्चचेतना॥६४॥संविज्ज्ञ
प्तिश्चोपलब्धिश्चिन्मेधामननंमनः॥भानंबोधश्चहृल्लेखःसंख्याच
प्रतिभाचसा॥६५॥आदानंरोगहेतुःस्यान्निदानंरोगलक्षणं॥चिकि
त्सानम्नीकास्आरोग्यंवह्निवर्धनं।६६।मंडःपेयाविलेपीत्वयवा

गूःपथ्यभेदकाः॥भक्तैर्विनाद्रवोमंडःपेयंभक्तसमन्वितः॥६७॥
विलेपीवहुभक्तास्याद्यवागूर्विरलद्रवा॥विदलंमांसमाषादिप
क्वासूपाभिधायिका॥६८॥पथ्यादिलक्षणं॥पादाहारंपथ्यमाहु
श्चवैद्याविंद्याद्धीहारमाहारसंज्ञं॥पादोनंस्याद्भोजनंभोगमन्य
द्विद्यात्शेषंवांनदोषप्रसूत्यै॥६९॥अन्नंजीवनमाहारकरंगच्छि
ममोदनं॥अंभोभिःसाधनंह्योदमन्नायमशनंतथा॥७०॥आहा
रभेदाः॥भोज्यंपेयंतथाचोष्यंलेह्यंखाद्यंचचर्वणं॥निष्पेयंचैवभ
क्ष्यंस्यादन्नमष्टविधंस्मृतं॥७१॥मेलोगः॥व्यंजनंसूपशाकादिमि
श्रान्नंतेमनस्मृतं॥उपदंशोविदंशःस्यात्संधानोरोचकश्चसः॥७॥
भोजनं॥जेमनमभ्यवहारःप्रत्यवसानंचभोजनंजग्धिः॥वलान
मशनंखदनंनिषसाहारोचनिडारणान्यादः॥७३॥भक्षणं॥जक्ष
णंभक्षणंलेहःस्वादस्तरसनस्वदि॥चर्वणंपानपीतिंचधयनंभूष
णंभिधा॥षड्रसं॥मधुरोलवणस्तिक्तःकषायोम्लःकटुस्तथा॥न
संतिरसनीयत्वादन्नाद्येषडमीरसाः॥७५॥मधुरं॥मधुरंगौल्यमि
त्याहुरिक्ष्वादौचसलक्ष्यते॥लवणं॥लवणस्तुवरःप्रोक्तःसैंधवा
दौसदृश्यते॥७६॥तिक्तं॥तिक्तंचपिचुमंदादौव्यक्तमास्वाद्यतेर
सः॥कषाय॥कषायस्तुवरःप्रोक्तःसतुपूगीफलादिषु॥७७॥अ
म्लं॥अम्लस्तुचिंचाजंवीरमातुलिंगफलादिषु॥कटुकं॥कटुस्तु
क्षारसंज्ञःस्यान्मरीचादौसचेक्ष्यते॥इतिषड्रसलक्षणं॥मधुरश्चर
सश्चिनोतिकेशान्वपुषःस्थैर्यंवलौजवीर्यदायी॥अतिसेवनतःप्र
मेहशैत्यंजडतामांद्यमुखान्करोतिदोषान्॥७९॥लवणोरुचिकृद्र
सोग्निदायीपवनःस्वादुकरश्चसारकश्च॥अतिसेवनतोजरांचपि
त्तंशिनिमानंचददातिकुष्ठकारी॥८०॥तिक्तोजंतून्हंतिकुष्ठंज्वरा
र्तिक्लासंदाहंदीपनोरोचनश्च॥मूर्च्छांगाढंप्रत्यहंसेवितश्चेत्तीव्रंदत्ते
राजयक्ष्माणमेषः॥८१॥कषायनामानिरुणद्धिशोफंवर्णंननोदीप
नपाचनंच॥सत्तापहोसौशिथिलत्वकारीनिषेवितःपांडुकरोतिगा
त्रं॥८२॥अम्लाभिधःप्रीतिकरोरुचिप्रदःप्रपाचनोयेमृदुतांचयच्छ
ति॥भ्रांतिंचकुष्ठंकफपांडुतांचकार्ष्ण्यंचकासंकुरुतेतिसेवितः॥८३॥

कटुःकफंकंठजदोषशोफमंदानिलश्वित्रगदान्निहंति॥एषोपिद
त्तेबहुसेवितश्चेत्क्षयावहोवीर्यबलस्यंच॥८४॥द्वंद्वरसगुणाः॥क
टुःकषायश्चकफापहारिणौमाधुर्यतिक्तावपिपित्तनाशनौ॥कट्व
म्लसंज्ञौचरसौमरुद्धरौद्वंद्वंहिषोमीसकलामयापहाः॥८५॥इति
षड्रसवीर्यपाकः॥अन्योन्यंमधुराम्लौलवणाम्लौकटुतिक्तकौच
रसौ॥कटुलवणौचस्यातांमिश्ररसौतिक्तलवणौच॥८६॥लवण
मधुरौविरुद्धावथकटुमधुरौचतिक्तमधुरौच॥साधारणमेषक
षायःसर्वत्रसमानतांधत्ते॥८७॥संधत्तेमधुरोम्लतांचलवणोधत्ते
यथावस्थितिंतिक्ताख्यःकटुतांतथामधुरतांधत्तेकषायाह्वयः॥
अम्लस्तिक्तरुचिंददातिकटुकोयात्यंततस्तिक्ततामित्येषांस्ववि
पाकतोपिकथितांषण्णांरसानांस्थितिः॥८८॥मधुरोम्लंकटुस्ति
क्तःकटुस्तुवरइत्यमी॥क्रमादन्योन्यसंकीर्णानानात्वंयांतिषड्रसाः
॥८९॥आद्याद्यैर्मधुरादिश्चेदेकैकेनोत्तरेणयुक्॥द्विकभेदःपंचद
शपर्यायैःपंचभिस्तथा॥९०॥आद्यःसानंतरःप्राग्वदुत्तरेणयुतोयदा
॥चतुर्भिरपिपर्यायैराद्येप्रोक्ताभिदादश॥९१॥एवंद्वितीयेषट्भेदा
स्तृतीयेचत्रयःस्मृताः॥चतुर्थेचैकइत्येतेत्रिकभेदास्तुविंशतिः॥९२॥
आद्यौसानंतरौत्रिषडेकैकाग्निमयोगतस्त्यक्ते॥द्वितीयेचत्वारःसा
ग्निमेकैकसंयुते॥९३॥आद्येत्युक्तेतुपंचस्युःसाग्निमेकैकसंयुते॥च
तुष्कभेदाइत्येतेक्रमात्पंचदशेरिताः॥९४॥ततःपंचकभेदाःषडेकैक
त्यागतःस्मृताः॥एकःसर्वसमासेनव्यासेषडितिसप्तते॥९५॥एवंत्रिष
ष्टिराख्यातारसभेदाःसमासतः॥तारतम्येष्वसंख्यातांस्तान्वेत्तियदि
शंकरः॥९६॥बृंहणंपुष्टिदंपोष्यमुक्तंपीनत्वदंचतत्॥वीर्यवृद्धिक
रंवृष्यंवाजीकरणबीजकृत्॥९७॥आप्यायनंतर्पणंचप्रीणनंतोषणं
चतत्॥निष्यंदनभिष्यंदिनेत्रद्रावंस्रवत्॥९८॥इतिबहुविधरो
गव्याधितोप्रक्रमोक्तिःप्रकृतभिषगनूक्ताहारपथ्यप्रयोगं॥इममखि
लमुदित्वावर्गमुत्सर्गसिद्धांतप्रवदतुसचविद्वानामयप्रत्ययांस्तान्
॥९९॥येनव्याधिशतांधकारपटलंनिष्कासनाभास्करप्रायेणाविपुल
स्तरांप्रवितनाहंतद्विषांव्याधयः॥तस्यायंकृतिवाचिविंशतितमःश्री

मन्नृसिंहेशितुःश्रांतिर्नीमकिरीटमंडनमणौवर्गोगदादिर्गतः॥१००
॥इतिश्रीमन्नरहरिपंडितविरचितेनिघंटुराजापरनाम्न्यभिधानचू
डामणौरोगप्रकरणंनामविंशोध्यायः॥२०॥सत्वंरजस्तमश्चेतिपुंसा
मुक्तास्त्रयोगुणाः॥तेषुक्रमाद्मीदोषाःकफपित्तानिलाःस्थिताः॥१
॥सत्वंश्लेष्मारजःपित्तंतमश्चापिसमीरणः॥द्रव्यस्यमानमुद्रिक्तंपुं
सिपुंस्यनुवर्त्तते॥२॥सत्वंमनोविकाशःस्यात्सत्वायत्तातथास्थि
तिः॥रजोरूक्षणमुद्रेकःकालुष्यंमतिविभ्रमः॥३॥तमस्तिमिरमां
ध्यंचचित्तोन्मेषश्चमूढता॥हृदयाकरणंध्वांतमंधकारोविमोह
नं॥४॥इतिगुणत्रयलक्षणं॥श्लेष्मपर्याय॥वातोगंधवहोवायुः
पवमानोमहाबलः॥स्पर्शनोगंधवाहीचपवनोमरुदाशुगः॥६
॥श्वसनोमातरिश्वाचनभस्वान्मारुतोनिलः॥समीरणोजगत्प्रा
णःसमीरश्चसदागतिः॥७॥जवनःपृषदश्वश्चतरस्वीचप्रभंजनः
॥प्रभावनोनवस्थानोधूननोमोटनःखगः॥८॥अन्येपिवायवोदे
हेनाडीचक्रप्रवाहकाः॥मयावितत्यनोक्तास्तेग्रंथगौरवभीरुणा
॥९॥इतित्रिदोषनाम॥सत्वादिगुणसंभिन्नदोषत्रयवशात्मना॥
आभ्यंतरंचवाह्यंचस्वरूपंसन्निरुच्यते॥१०॥सत्वाद्यःशुचिरास्ति
कःस्थिरमतिःपुष्टांगकोधार्मिकःकांतःसोपिवहुप्रजासुमधुरक्षी
रादिभोज्यप्रियः॥दातापात्रगुणादृतोद्रुततमंवाग्मीकृपालुःसमो
गौरःश्यामतनुर्घनांवुतुहिनस्वप्नेक्षणःश्लेष्मलः॥११॥राजसेपि
त्तप्रकृतिः॥राजसोलवणाम्लतिक्तकटुकप्रायोष्णभोजीपटुःप्रौ
ढोनातिकृशोप्यकालपलितीक्रोधप्रपंचान्वितः॥द्राघीयानुग्रहि
लाशयोवितरिताःसोपाधिकंयाचितोगौरांगःकनकादिदीप्तिल
लितःस्वप्नेचपित्तात्मकः॥१२॥तामसेवातप्रकृतिः॥निद्रालुर्बहु
भावकःसुकुटिलःक्रूराशयोनास्तिकःप्रायःपर्युषितातिशीतविर
साहारैकनिष्ठोलसः॥कार्येषुत्वभिमानवानसमयेदातापथोच्चंक्र
शःस्वप्नेव्योमगतिःसितेतरतनुर्वातूलकस्तामसः॥१३॥मिश्रप्रकृ
तिलक्षणं॥सत्वादीनांगुणायत्रमिश्रिताःसंतिभूयसा॥मिश्रप्रकृ
तिकःसोयंविज्ञातव्योमनीषिभिः॥१४॥अपिच॥सत्वादिरजसामि

श्रेश्रेष्ठंसत्वादिनामसे॥मध्यमंरजसामिश्रेकनीयोगुणमिश्रणं॥१५
॥गुणत्रयगुणलक्षणं॥सत्वंचित्तविकाशमाशुतनुतेदत्तेप्रबोधस्त
नांकालुष्यंकुरुतेरजस्तुमनसःप्रस्तौतिचाव्याकृतिं॥आंध्यंहंत
हृदिप्रपद्धतितिरोधत्तेस्वतत्वेधियंसंधत्तेजडतांचसंततमुपाध
त्तेप्रसीलांतमः॥१६॥वातप्रकोपलक्षणं॥वातःस्वैरंस्याल्लघुःशी
तरूक्षःसूक्ष्मःस्पर्शज्ञानकस्तोदकारी॥माधुर्यान्नेसोभकालेप
राह्णेप्रत्यूषेन्नेपातिजीर्णेचकोपं॥१७॥पित्तप्रकोप॥पित्तंचति
क्ताम्लरसंचसारकंचोष्णंद्रवंतीक्ष्णमिदंमघोबहु॥वर्षांतका
लेभृशमर्द्धरात्रेमध्यंदिनेन्नस्यजरेचकुप्यति॥१८॥श्लेष्मप्रको
प॥श्लेष्मागुरुःश्लक्ष्णमृदुःप्रमत्तुकःस्निग्धःपटुःशीतजडश्चगौ
ल्यवान्॥शीतेवसंतेचभृशंनिशामुखेपूर्वेन्हिभुक्तोपरिचप्रकुप्य
ति॥१९॥दोषत्रयस्ययेभेदावृद्धिक्षयविकल्पतः॥तावंतःसंप्रवक्ष्या
मिसंक्षेपार्थसमंजसं॥२०॥एकैकवृद्धौसुभेदास्त्रयोयेवृद्धिक्ष
यः॥तत्राप्येकतराह्यर्थेषडेवद्वौदशैवते॥२१॥वृद्धातुमत्यपाभ्यां
षट्त्रिप्रवृध्यातुसप्तमः॥वृद्धोन्योन्योरुद्धतरःपरोवृद्धतमस्त्विति
॥२२॥तारतम्येनषड्भेदास्तएवंपंचविंशतिः॥एवंक्षयेपितावंतस्त
तःपंचाशदीरिताः॥२३॥वृद्धोन्योन्यःसमोन्यश्चक्षीणस्त्वितिपुन
श्चषट्॥द्विवृध्येकक्षयादुक्तव्यत्ययाच्चपुनश्चषट्॥२४॥एतेद्वा
दशतःसर्वेद्विषष्टिःसमुदाहृताः॥त्रिषष्टिस्त्वंतिमोभेदस्त्रयाणां
प्रकृतौस्थितिः॥२५॥एवंदोषत्रयस्यैतद्भेदंविज्ञायतत्त्वतः॥ततो
हिषट्प्रयुंजीततद्वस्थोचिताःक्रियाः॥२६॥भूतभविष्यवर्तमा
न॥कालस्तुवेलासमयोप्यनेहादिष्टश्चलक्ष्मावसरस्थिरश्च॥सो
प्येकभूतःकिलवर्तमानस्तथाभविष्यस्त्विदितिचत्रिधोक्तः॥२७॥भू
तोवृत्तमतीतंचह्यस्तनंनिस्तुतंगतं॥वर्तमानेभवत्वाद्यतनंस्यादधु
नातनं॥२८॥अनागतंभविष्यंस्यात्श्वस्तनंचप्रगेतनं॥वर्त्यद्वर्ति
ष्यमाणंचस्यादागामिचभाविच॥२९॥साधारणंतुसामान्यंतत्सर्वत्रा
नुवर्त्तते॥विशेषणंविशेषश्चसकृत्स्थानेचवर्त्तते॥३०॥तुर्यंपादंच
तुर्थांशमीषत्किंचित्तथोच्यते॥

स्वच्छोद्योतप्रसंदामंदःस्वच्छंदापूराभःस्वर्गगासंगोन्मीलनमौलिं॥
मेरुश्रीकैलासक्रीडासंघाटीशोभानंभःश्लाघाजंघालश्रीगौरीगूढां
गंवंदेशंभुं॥३१॥शब्दोच्चारेसकलगुरुकेपष्टिवर्णप्रमाणेमानंकाले
पलमितिदशस्यात्क्षणस्तानिनैस्तु॥षड्भिर्नाडीप्रहरइतिताःसप्तसा
र्धास्तथाहोरात्रेज्ञेयःसुमतिभिरसावष्टभिस्तैःप्रदिष्टः॥३२॥पलादि
वकं॥पक्षःस्यात्पंचदशभिरहोरात्रैरुभाविमौ॥मासोद्वादशभिर्मा
सैःसंवत्सरउदाहृतः॥३३॥द्विशश्चैत्रादिभिर्मासैर्विज्ञेयाऋतवश्च
षट्॥त्रिभिस्त्रिभिःक्रमादेतैःस्यातांचविषुवायने॥३४॥पलंविघटि
काप्रोक्तानाडीतेस्तुत्रिविंशतिः॥नाडीतुघटिकाप्रोक्तातद्द्वयंचमु
हूर्तकं॥३५॥यामःप्रहरइत्युक्तोदिनभागोदिनांशकः॥अहोरात्रदि
वारात्राहर्दिवाहर्निशनिच॥३६॥घस्रोदिनोपिदिवसोवासरोभा
स्वरोदिवा॥प्राह्णापराह्णमध्याह्नसायाह्नाःसुखदंशकाः॥३७॥
प्रातर्दिनादिःप्रत्यूषोनिशांतःप्रत्युषोउषः॥व्युष्टंचाहर्मुखंकल्यं
प्रगेप्राह्णंप्रभातकं॥३८॥विशिलु॥आतपस्तुदिनज्योतिःसूर्यालो
कःप्रभाकरः॥रविप्रकाशःप्रद्योतस्तमोरिस्तपनद्युतिः॥३९॥रो
चिर्दीप्तिद्युतिःशोचिस्त्विडोजोभारुचिःप्रभा॥विभालोकप्रकाश
श्चतेजओजायितंचरुक्॥४०॥संध्यासायंदिनांतश्चनिशादिर्दिव
सात्ययः॥सायंपितृप्रसूश्चाद्यप्रदोषःस्यान्निशामुखं॥४१॥छाया
वीभानुगाश्यामानेजोभीरुरनातपं॥आभीतिरातपाभावोभावाली
नाचसास्मृता॥४२॥रात्रि॥शर्वरीक्षणदारात्रिर्निशाश्यामातमस्वि
नी॥तमीत्रियामाशयनीस्वपायामवतीनमा॥४३॥नक्तंनिशीथि
नीदोषातारा भूषाविभावरी॥ज्योतिष्मतीतारकिनीकालीसापि
कलापिनी॥४४॥साज्योत्स्नाचंद्रिकायुक्तातमिस्रातुतमोन्विता
॥अर्धरात्रोनिशीथिन्यांमध्यरात्रंचसःस्मृतः॥४५॥ज्योत्स्नातुचं
द्रिकाचांद्रीकौमुदीकामवल्लभा॥चंद्रातपश्चंद्रकांताशीतासूनन
रंगिणी॥४६॥चेलुवितिके॥कांतिस्तुसुषमाशोभाछविश्छायावि
भासुभा॥श्रीर्लक्ष्मीरीक्त्रियाभिख्याभातंभानिरुमारमा॥४७॥कृत्त
ले॥तमस्तमिस्रंतिमिरंध्वांतंसंतमसंतमः॥अंधकारंचभूक्षापंतत्रां

धनमसंपन्नं॥४८॥पक्षादिःप्रथमाद्याचपक्षतिःप्रतिपच्चसा॥पक्षां
तोर्केंदुविश्लेषःपर्वःपंचदशीतथा॥५०॥द्वितीयंतुभवेत्पर्वचंद्रार्का
त्यंतसंगमः॥पक्ष॥प्रथमाद्यंताःक्रमात्द्वितीयादिकश्चपंचदश
॥पक्षेतिथयोज्ञेयाःपक्षश्चसितोऽसितोद्विविधः॥५१॥शुक्लपक्ष॥
सितस्त्वापूर्यमाणःस्यात्शुक्लश्चविशदःशुचिः॥कृष्णपक्ष॥असि
तोमलिनःकृष्णोबहुलोवदिचस्मृतः॥५२॥दिवसेयत्रतत्रापिवसु
सागरसंमितैः॥भिषक्क्रियोपयोगायमंडलंभिषजांमतं॥५३॥पू
र्णिमापौर्णमासीचज्योत्स्नाचेंदुमतीशुचा॥सापूर्वानुमतिर्ज्ञेयाराका
स्यादुत्तराचसा॥५४॥दर्शस्तुस्यादमावास्याऽमावस्यार्केंदुसंगमः॥
सापूर्वातुसिनीवालीद्वितीयातुकुहूर्मता॥५५॥मासार्द्धस्तुभवेत्पक्षः
सपंचदशरात्रकः॥द्विपक्षस्तुभवेन्मासश्चैत्राद्याद्वादशाश्चते॥५६॥
चैत्रस्तुचैत्रिकश्चैत्रीमधुःकालादिकश्चसः॥वैशाख॥वैशाखोमा
धवोराधोज्येष्ठःशुक्रस्तपस्तथा॥५७॥आषाढः॥आषाढःशुचिरुक्तः
श्रावणिकःश्रावणोनभाश्चापि॥भाद्रपद॥भाद्रोभाद्रपदोविप्रोप्रोष्ठ
पःस्यान्नभस्यच॥आश्वयुज॥इषस्त्वाश्वयुजश्चस्यादाश्विनःशारद
श्चसः॥५८॥कार्त्तिक॥कार्त्तिकोबाहुलोपिस्यादूर्जःकार्त्तिकिकश्च
सः॥मार्गशीर्ष॥मार्गःसहामार्गशीर्षआग्रहायणिकोपिसः॥५९॥
पुष्य॥पौषस्तुपैष्टिकस्तैषःसहस्योहेमनोपिच॥माघ॥माघस्तपा
स्तपस्यस्तुफाल्गुनोवत्सरांतकः॥६०॥चैत्रादिमासौद्वौद्वौस्तुनी
त्वाषड्नवःक्रमात्॥भवेद्वसंतोमधुमाधवाभ्यांस्यात्तथाशुक्र
शुचीनिदाघः॥नभोनभस्योजलदागमःस्याद्दीपोर्जकाभ्यांशरदं
वदंति॥६१॥हेमंतकालस्तुसहःसहस्यौतपस्तपस्यौशिशिरःक्र
मेण॥मासद्विकेनेतिवसंतकाद्याधीमद्भिरुक्ताऋतवःषडेते॥६२॥
ऋतुराजोवसंतःस्यात्सुरभिर्माधवोमधुः॥पुष्पमासःपिकानंदः
कांतःकामसखश्चसः॥६३॥निदाघस्तूष्मकोघर्मोग्रीष्मऊष्मागम
स्तपः॥तापनश्चोष्णकालःस्यादुष्णश्चोष्णागमश्चसः॥६४॥वर्षा
प्रावृड्वर्षकालोघर्मांतोजलदागमः॥मयूरोल्लासकःकांतश्चात
काह्लादनोपिसः॥६५॥शरद्वर्षावसायःस्यान्मेघांतःप्रावृडत्ययः॥

ऊष्मापहस्तु हेमंतः शरदंतो हिमागमः॥ ६६॥ शिशिरः कंपनः शीतो हिमकूटश्च कूटनः॥ इत्येतन्नामतः प्रोक्तमृतुषट्कं यथाक्रमं॥ ६७॥ इत्यृतवः॥ इह सुरभिनिदाघमेघकालाः शिशिरशरद्धिमहायनाः क्रमेण॥ प्रतिदिनमृतवः स्युरूर्ध्वमर्कोदयसमयाद्दशकेन नाडिकानां॥ ६८॥ उत्तरायणं॥ दक्षिणायनं॥ मकरक्रांतिमारभ्य भानोः स्यादुत्तरायणं॥ कर्कटक्रमणादूर्ध्वं दक्षिणायनमुच्यते॥ ६९॥ विषुव॥ यदा तुलां च मेषं च सूर्यसंक्रमणं क्रमात्॥ तदा विषुवतो स्यातां विषुवे अपि ते स्मृते॥ ७०॥ संवत्सरादिकालस्तैः षष्टिरख्यापि वत्सराः॥ प्रभवादयः॥ शरत्संवत्सरोऽब्दश्च हायनो वत्सरः समाः॥ ७१॥ वसंते दक्षिणे वातो भवेद्वर्षासु पश्चिमः॥ उत्तरः शारदे काले पूर्वो हेमंतशैशिरे॥ ७२॥ इति वायुदिग्व्यवस्था॥ पूर्वस्तु मधुरो वातः स्निग्धकूटरसान्वितः॥ गुरुर्विदाहशमनो वातदः पित्तनाशनः॥ ७३॥ दक्षिणः षड्रसो वायुश्च सुष्यो बलवर्धनः॥ रक्तपित्तप्रशमनः सौख्यकांतिबलप्रदः॥ ७४॥ पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः॥ सद्यः प्राणापहो दुष्टः शोषकारी शरीरिणां॥ ७५॥ उत्तरः पवनः स्निग्धो मृदुर्मधुर एव च॥ सकषायरसः शीतो दोषाणां च प्रकोपनः॥ ७६॥ कृत्वैवमवधिं तस्मादिदं पूर्वं च पश्चिमं॥ इति देशान्विनिर्दिश्य यथा सा दिगिति स्मृता॥ ७७॥ दिगाशा च हरित्काष्ठा ककुप्चा च निदेशिनी॥ सा च देशविभागेन दशधा परिकल्प्यते॥ ७८॥ ज्योतींषि तपनादीनि ज्योतिश्चक्रभ्रमीक्रमात्॥ यतो नित्यमुदीयंते सा पूर्वा स्यादिगुच्यते॥ ७९॥ पूर्वा च दक्षिणा चैव पश्चिमा चोत्तरापि च॥ प्रादक्षिण्यक्रमेणैताश्चतस्रः स्युर्महादिशः॥ ८०॥ पूर्वा प्राची पुरो माघोन्यैंद्री माघवती च सा॥ याम्या नीदक्षिणा प्राची यामी वैवस्वती च सा॥ ८१॥ पश्चिमा तु प्रतीची स्याद्वारुणी प्रत्यगित्यपि॥ उत्तरा दिक्कुबेरी दैवसि स्यादुदीच्यपि॥ ८२॥ इति दिशः॥ दिशोर्द्वयोर्द्वयोर्मध्ये यो भागः कोणसंज्ञितः॥ विदिशस्ताश्चतस्रश्च प्रोक्ता उपदिशस्तथा॥ ८३॥ कोणे गलु॥ आग्नेयी स्यात्प्राच्यपाच्योस्तमध्ये नैर्ऋत्यास्मा स्यादपाचीप्रतीच्योः॥ वायव्यापि स्यादुदीचीप्र

तीच्योरैशानीस्यादंतरा प्राच्युदीच्योः॥८४॥उपरिशादिगूर्ध्वंस्याद
धस्तादधरास्मृता॥अंतस्त्वभ्यंतरंप्रोक्तंअंतरंचांतरालकं॥८५॥इ
तिविदिशः॥स्यष्टस्त्वष्टयवैर्देश्योमितोज्ञेयोंगुलाह्वयः॥स्याच्चतु
र्विंशकैस्तैस्तुहस्तोहस्तचतुष्टयं॥८६॥दंडोदंडैर्द्विसाहस्रैःक्रोश
स्तेषांचतुष्टयं॥योजनंस्यादितिह्येषदेशस्योक्तोमितिक्रमः॥८७
॥इतिप्रस्तावतोवैद्यस्योपयुक्तंतथामया॥परिमाणंतथोन्मान
मितिद्वितयमीर्यते॥८८॥इतियोजनप्रमाणं॥धान्येसानिष्टिका
पुंसोयतुमुष्टिचतुष्टयं॥तद्द्वयेनाष्टिकाज्ञेयाकुडवस्तद्द्वयेनतु॥८९
प्रस्थस्तुतच्चतुष्केणतच्चतुष्केणआढकी॥ताश्चतस्त्रोभवेद्द्रोणःखा
रीतेषांतुविंशतिः॥९०॥मुष्टिरष्टादशोमाषः॥इतिधान्यमापल
क्षणं॥गोधूमद्वितयोन्मितिस्तुकथितागुंजानयासार्धयावल्लोव
ल्लचतुष्टयेनभिषजांमाषोमतस्तच्चतुः॥निष्कोनिष्कयुगंतुसार्ध
मुदितःकर्षःपलंतच्चतुस्तद्द्वंशीशरवेणतच्छुरतुलाभारंतुलानां
शतं॥९१॥इतिनूकक्रमः॥संग्रामोत्संगरिंगत्तुरगखुरपुटोद्धूत
धात्रीरजोभिःसंरंभंपातिसांद्रेनमसिकिलशमंयद्विषांयातिसत्वं
॥तस्यैषोप्येकविंशःश्रयतुखलुकृतौनामनिर्माणचूडारत्नापीठे
प्रशांतिंनरहरिकृतिनःक्रोपिसत्वादिवर्गः॥९३॥इतिश्रीनरह
रिपंडितविरचितेराजनिघंटौसत्वादिरेकविंशोवर्गः॥२१॥अथ
मिश्रकादिवर्गः॥यान्यौषधानिमिलितानिपरस्परेणसंज्ञांतरैर्व्य
वहृतानिचयोगरूढिः॥तेषांस्वरूपकथनायविमिश्रकाख्यंवर्गं
महागुणमुदारमुदीरयामः॥१॥मरिचंपिप्पलीशुंठीत्रयमेतद्विमि
श्रितं॥त्रिकटुत्र्यूषणंत्र्यूषंकटुत्रयकटुत्रिकं॥२॥हरीतकीचामल
कंविभीतकमितित्रयं॥त्रिफलात्रिफलीचैवफलत्रयफलत्रिके
॥३॥लाक्षाकाश्मर्यखर्जूरीफलानिमिलितानितु॥मधुरात्रिफला
ज्ञेयामधुरादिफलत्रयं॥४॥जातीफलंपूगफलंलवंगकलिकाफ
लं॥सुगंधित्रिफलाप्रोक्तासुरभित्रिफलाचसा॥५॥चंदनंकुंकुमं
वारित्रयमेतद्व्यार्धकं॥त्रिभागकुंकुमोपेतंतदुक्तंचाद्यपुष्पकं॥६॥
सैंधवंचविडंचैवरुचकंचेतिमिश्रितं॥लवणत्रयमाख्यातंतच्चत्रिल

वणंतथा॥७॥सर्जिकाचयवक्षारटंकणक्षारएवच॥क्षारत्रयंचत्रिक्षारंक्षारत्रितयमेवच॥८॥हरीतकीनागरंचगुडंचेतित्रयंसमं॥समत्रितयमित्युक्तंत्रिसमंचसमात्रया॥९॥सितामाक्षिकसर्पीषिमिलितानियदातदा॥मधुरत्रयमाख्यातंत्रिमधुस्यान्मधुत्रयं॥१०॥गुडोमन्नाहिमोत्पन्नामधुराचेतिमिश्रितं॥त्रिशर्कराचत्रिसितासितात्रयसितात्रिके॥११॥कालांजनसमायुक्तेपुष्पांजनरसांजने॥अंजनत्रितयंप्राहुस्त्र्यंजनंचांजनत्रयं॥१२॥वातःपित्तंकफश्चेतित्रयमेकत्रसंयुतं॥दोषत्रयंत्रिदोषंस्याद्दोषत्रितयमित्यपि॥१३॥वातपित्तकफायत्रसमतांयांतिनित्यशः॥त्रिदोषसममित्येतत्समदोषत्रयंतथा॥१४॥वृहतीचाग्निदमनीदुःस्पर्शाचेतितुत्रयं॥कंटकारीत्रयंप्रोक्तंत्रिकंटकंटकत्रयं॥१५॥नागरातिविषामुस्तात्रयमेतत्त्रिकर्षिकं॥गुडूच्यामिलितंतच्चचातुर्भद्रकमुच्यते१६त्वगेलापत्रकैस्तुल्यैस्त्रिसुगंधंत्रिजातकं॥नागकेसरसंयुक्तंचातुर्जातकमुच्यते॥१७॥एलात्वक्पत्रकैस्तुल्यैर्मरिचेनसमन्वितैः॥कटुपूर्वमिदंचान्यच्चातुर्जातकमुच्यते॥१८॥श्रीखंडागरुकर्पूरकाश्मीरैस्तुसमांशकैः॥मृगांकमुकुटाहोंयंमिलितैर्यक्षकर्दमः॥॥१९॥कर्पूरागरुकस्तूरीकंकोलैर्यक्षकर्दमः॥यक्षकर्दमइतिद्रव्यचतुष्टयगुणागुणः॥कंकुमागरुकुरुंगनाभिकाचंद्रचंदनसमांशसंभृतं॥यक्षपूजनपरैकगोचरंयक्षकर्दममिदंप्रचक्षते॥२०कर्पूरकंकोललवंगपुष्पगुहाकजातीफलपंचकेन॥समांशभागेनचयोजितेनमनोहरंपंचसुगंधकंस्यात्॥२१॥पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः॥सर्वैरेकत्रमिलितैःपंचकोलकमुच्यते॥२२॥न्यग्रोधोदुंबराश्वत्यप्लक्षवेतसवल्कलैः॥सर्वैरेकत्रमिलितैःपंचवेतसमुच्यते॥२३॥पंचवेतस॥शालिपर्णीपृश्निपर्णीवृहतीकंटकारिका॥तथागोक्षुरकश्चेतिलघ्विदंपंचमूलकं॥॥२४॥विल्वोग्निमंथःस्योनाकःपाटलीटुंटुकस्तथा॥सर्वैस्तुमिलितैरेतैःस्यान्महापंचमूलकं॥२५॥पंचमूलकयोस्तेतत्द्वयंचमिलितंयदा॥तदाभिषग्भिराख्यातंगुणाढ्यंदशमूलकं॥२६॥वलापुन

नैवैरंडैःसूर्पपर्णीद्वयेनतु॥एकत्रयोजितैनैतन्मध्यमंपंचमूलकं॥
॥२७॥गुडूचीगोक्षुरश्चैवमुशलीमुंडिकातथा॥शतावरीतिपंचानां
योगःपंचामृताभिधः॥२८॥गव्यमाज्यंदधिक्षीरंमाक्षिकंशर्करान्वितं
॥एकत्रमिलितंज्ञेयंदिव्यंपंचामृतंपरं॥२९॥गोमूत्रंगोमयंक्षीरंगव्य
माज्यंदधीतिच॥युक्तमेतद्यथायोगंपंचगव्यमुदाहृतं॥३०॥निंबस्य
पत्रत्वक्पुष्पफलमूलैर्विमिश्रितैः॥पंचनिंबंसमाख्यातंनतिक्तंनिंब
पंचकं॥३१॥कोलदाडिमवृक्षाम्लचुल्लिकाचाम्लवेतसैः॥फलंपंचा
म्लमुद्दिष्टमम्लंपंचफलंस्मृतं॥३२॥जंबीरनारिंगसहाम्लवेतसैःस
तित्तिडीकैश्चसबीजपूरकैः॥समांशभागेनतुमेलितैरिदंद्वितीयमु
क्तंचफलाम्लपंचकं॥३३॥चांगेरीलिकुचाम्लवेतसयुतंजंबीरकंपू
रकंनारंगंफलशाडवस्त्विंतितुपिंडाम्लंचबीजाम्लकं॥अंबष्ठासहि
तंद्विरेतदुदितंपंचाम्लकंतद्द्वयंविज्ञेयंकरमर्दनिंबकयुतंस्यादम्ल
वर्गाह्वयं॥३४॥तैलकंदःसुधाकंदःक्रोडकंदोरुदंतिका॥सर्पने
त्रयुताःपंचसिद्धौषधिकसंज्ञकाः॥३५॥शैरीषंकुसुमंमूलंफलंप
त्रंत्वगित्ययं॥कीरादिःकथितोयोगःपंचशैरिषकाभिधः॥३६॥त्व
क्पत्रकुसुमंमूलंफलमेकस्यशाखिनः॥एकत्रमिलितंतच्चेत्पंचांग
मितिसंज्ञितं॥३७॥विदारिकंदावृहतीपृश्निपर्णीनिदिग्धिका॥श्व
दंष्ट्राचेतिसंप्रोक्तोयोगःपंचगणाभिधः॥३८॥अत्यम्लपर्णीकांडीरमा
लाकंदद्विसूरणैः॥प्रोक्तोभवतियोगोयंपंचसूरणसंज्ञकः॥३९॥
शृंगीचकालकूटश्चमुस्तकोवत्सनाभकः॥सक्तुकश्चेतियोगोयंम
हापंचविषाभिधः॥४०॥स्नुह्यर्ककरवीराणिलांगलाविषमुष्टिका
॥एतान्युक्तानिभिषजापंचपांडित्यशालिना॥४१॥गवामजानांमे
षीणांमहिषीणांचमिश्रितं॥मूत्रेणगर्दभीनांचतन्मतंमूत्रपंचकं॥
॥४२॥सुवर्णरजतंताम्रंत्रयमेतत्त्रिलोहकं॥वंगनागसमायुक्तंत
न्माहुःपंचलोहकं॥४३॥सुवर्णरजतंताम्रंत्रपुकृष्णायसंसमं॥ग्र
हांगमितिवाद्रव्यंद्वितीयंपंचलोहकं॥४४॥यवमुष्ककस्वर्जिनांपला
शतिलयोस्तथा॥क्षारैस्तुपंचभिःप्रोक्तःपंचक्षाराभिधोगणः॥४५॥
कांचसैंधवसामुद्रविडसौवर्चलैःसमैः॥स्यात्पंचलवणंतच्चमृत्स्नो

पेनं षडाहूयं॥मत्स्यायांसुलवणंरेहइतिप्रसिद्धं॥इतिपंचद्रव्यग
णः॥धवापामार्गकुटजलांगलीतिलमुष्कजैः॥क्षीरैरेतैस्तुमि
लितैः क्षारषट्कउदाहृतः॥४७॥इतिषट्कद्रव्यगणः॥रसासृङ्मांस
मेदोस्थिमज्जाशुक्रसमाहूयैः॥शरीरस्थैर्मदैरेतैः सप्तधातुमयो
गणः॥४८॥इतिसप्तधातुगणः॥दरदःपारदःसस्योवैक्रांतंकां
तमभ्रकं॥माक्षिकंविमलंचेतिस्युरेतेष्टैमहारसाः॥४९॥खेच
रांजनकंकुष्ठगंधालंगैरिकक्षितिः॥शैलेयांजनसंमिश्राःशंसं
त्युपरसाबुधाः॥५०॥कंपिल्लगौरीचफलाकपर्दसशैलसिंदूरक
वह्निजारान्॥पाषाणिनोबादरशृंगयुक्तानित्यष्टकंसूतसमा
नमाहुः॥५१॥पंचलोहसमायुक्तंकांतमुंडकतीक्ष्णकं॥कल्पितः
कथितोधीरैरष्टलोहाभिधोगणः॥५२॥इत्यष्टद्रव्यगणः॥शिग्रु
मूलकपलाशशुक्तिकाचित्रकार्द्रकसनिंबसंभवैः॥इक्षुशेखरि
कमोचिकोद्भवैःक्षारपूर्वदशकंप्रकीर्तितं॥५३॥मूत्राणिहस्तिमे
षोष्ट्रगवाजकानांमेषाश्वरासभकमानुषमानुषीणां॥यत्नेनयत्र
मिलितानिदशेतितानिशास्त्रेषुमूत्रदशकाहूयभांजिनीति॥५४॥
इतिदशद्रव्यगणः॥स्याज्जीवकर्षभकयुग्मयुगद्विभेदाकाकोलि
काहूययुनद्धिकसूर्यपर्ण्यः॥जीमामधूकयुनयामधुराहूयोयंयो
गोमहानिलविराजतिजीवकादिः॥५५॥जीवकर्षभकौमेदेकाको
ल्याद्वृद्धिऋद्धिकौ॥एकत्रमिलितैरेतैरष्टवर्गःप्रकीर्तितः॥५६॥कु
ष्ठमांसीहरिद्राभिर्वचाशैलेयचंदनैः॥मुराकर्चूरमुस्ताभिःसर्वौ
षधमुदाहृतं॥५७॥अजाजीमरिचंशुंठीग्रंथिधान्यंविलहूयं॥
पिप्पलीमरिचंचेतिवेसवारगणोमतः॥५८॥सर्वौषधसमायुक्ताः
श्लक्ष्णास्त्वामलकत्वचः॥यदातदायंयोगःस्यात्सुगंधामलकाभि
धः॥५९॥द्राक्षादाडिमखर्जूरकदलीशर्करान्वितं॥लाजाचूर्णस
मध्वाज्यंसंतर्पणमुदाहृतं॥६०॥सक्तुभिःसर्पिषाभ्यक्तैःशीतवा
रिपरिप्लुतैः॥नात्यच्छोनातिसांद्रश्चप्रस्यदत्यभिधीयते॥६१॥दा
डिमंकिंशुकंलाक्षाबंधूकंचनिशाहूयं॥कुसुंभपुष्पंमंजिष्ठाइत्य
सोरसवर्णकः॥६२॥खदिनीश्वेनसंयुक्ताःशंखशुक्तिवराटकाः॥

भृष्टाश्मशर्कराचेनिम्रुक्तवर्गउदाहृतः॥६३॥भार्गीशटीपुल्क
सवत्सबीजदुरालभाभृंगिपटोलतिक्ताः॥किरातविश्वेंद्रकणे
भबीजधान्यानितिक्तंसुरदारुकंच॥६४॥अष्टांदशांगाभिधएष
योगःसमागमेस्याद्दशमूलकेन॥द्विधाचभार्ङ्ग्यादिकएकएष
ज्ञेयोद्वितीयस्तुकिरातकादिः॥६५॥द्वात्रिंशत्पलसंमितंदधिप
लान्यष्टौचखंडपलस्यार्द्धंचेन्मरिचस्यतेनतुलितंयुक्तंत्वगेला
द्वयं॥मध्वाज्यंचयुतंतदर्धमिलितैःसंशोधितैर्योजितंभांडेस्या
द्धिमवासिताशिखरिणीश्रीकंठभोग्यागुणैः॥इत्थंनानामिश्रयो
गाभिधानादेतंवर्गंमिश्रकाख्यंविदित्वा॥वैद्यःकुर्याद्योगमत्रान्य
संज्ञासंख्याज्ञानंबंधुभिर्योनधीरः॥६७॥शौर्यासंगरताचयास्व
यमुमाशश्वत्शिवासंगिनीसावाणीचतुराननप्रणयिनीसंमि
श्रितायंश्रिता॥तस्यायंत्वभिधानशेखरमणौवर्गोनृसिंहेशितु
र्द्वाविंशोवसितःकृतौकृतधियांयोमिश्रकाख्योमतः॥६८॥इ
तिश्रीनरहरिपंडितविरचितेनिघंटुराजापरपर्यायवत्यभिधा
नचूडामणौमिश्रकाख्योवर्गोद्वाविंशः॥२२॥अथैकार्थादिवर्गः
॥श्रीश्चलक्ष्मीफलेज्ञेयाअशनोबीजवृक्षकः॥शालूकंपद्मकंदे
स्यात्सद्पुष्पोरविद्रुमे॥१॥कुबेरकोनदीवृक्षोगोकंठ्येगोक्षु
रेतथा॥दंतफलस्तुपिप्पल्यांकसेरुर्भद्रमुस्तके॥२॥नागरोत्था
करुरुहाअंकोल्येदीर्घकीलकः॥शल्लकीसल्लकीवृक्षेमातुलिंगे
तुपूरकः॥३॥ब्रह्मघ्नीतुकुमारीस्यात्अंकालेगूढमल्लिका॥अ
तिविषाश्वेतविषोपकुंचिस्थूलजीरके॥४॥कवचःस्यात्पर्पट
केलवणंतुपयोधिजं॥बृहत्त्वक्सप्तपर्णेस्यात्कांभोजीवाकुची
तथा॥५॥वीटपाटीहंसपाद्यांकुनटीतुमनःशिला॥वैकुंठमर्जके
प्राहुर्भूधात्र्यांतुतमालिनी॥६॥शतकुंदःशरीरेस्यादग्निकाष्ठत
थागुणैः॥सूक्ष्मपत्रीशतावर्यांसीरवर्णोर्कसंज्ञके॥७॥शौंडीतु
पिप्पलीज्ञेयाकस्तूरीमदनीतथा॥ब्रह्मपर्णीपृश्निपर्ण्यांचित्रप
र्णीचसास्मृता॥८॥छत्रपर्णःसप्तपर्णेपीलुपर्णीतुतुंडिका॥शा
कश्रेष्ठस्तुवृंताकेशंगरःशमिरुच्यते॥९

तुंडिचारण्यबिंबिका॥विष्णुगुप्तंतुचाणक्यमूलेनंतायवासुकौ
॥१०॥कपिकच्छ्वात्मगुप्ताशंवानपोनस्तुकिंशुके॥पीतातुरजनीज्ञे
याबोधिवृक्षस्तुपिप्पलः॥११॥उशीरेसमगंधिस्याद्धिंगुलेचूर्णपा
रदः॥हिंगावगूढगंधःस्याद्रोदंतेविस्रगंधिका॥१२॥शाम्याग्नी
शानमित्याहुर्दीर्घवांधोलूकउच्यते॥पयस्याक्षीरकाकोल्यांशतवे
ध्यम्लवेतसे॥१३॥रोचनीनारिकेलेचभूधात्र्यांचारुदास्मृता॥प्रि
याप्रियंगुकेप्राहुःखराव्हाचाजमोदके॥नगरंदंडहस्तीस्याद्रसो
नोलसुनेस्मृतः॥तपस्विनीतुमांसीस्यात्मेघपुष्पाजंभृंगिका॥१५॥
शष्पंबालतृणंप्रोक्तंशैलेयंचाश्मपुष्पके॥श्रीपुष्पंतुलवंगेस्या
द्बालपुष्पीतुयूथिका॥पुष्पंतुस्थूलझिंडूकेचित्रकेदारुणःस्मृतः
अतस्याहिषपुष्पंतुपुष्पंस्यान्मादनानिच॥बलभद्रेचदंवेल्येआ
स्फोटेभूतवृक्षकः॥रामातमालपत्रेस्याद्भूर्जेचर्मद्रुमोमतः॥आत्म
शल्याशतवर्योपिकौकुलभवल्लभा॥विप्रप्रियःपलाशेचज्वरारि
स्तुगुडूचिका॥कंटकार्यांतुश्वेतायांज्ञेयातुकपटेश्वरी॥पांडुफलं
पटोलेस्यात्कालिपर्णोस्थिरामता॥गायत्रीखदिरेप्रोक्तास्यादेर्वा
रुस्तुकर्कटी॥नीवारेरण्यशालिःस्यात्पार्वत्यांगजपिप्पली॥सत्का
यांदेवपत्नीस्यादंकोल्लेदेवदारुच॥रीठाप्रकीर्यकेप्राहुर्दंत्यांकेश
रुहास्मृता॥आम्रस्तुसहकारेस्याज्ज्ञेयास्फालेदमेश्वरी॥तुष्णुत्रश्री
रकेप्राहुर्मीडेचैववितानकः॥मान्विषामंटकेप्रोक्तामार्जारीमृगना
भिजा॥तिंतिडीकेतिवीजाम्लेकदल्यांतुसकृत्फला॥जहिलश्चार
ण्यतिलेतार्स्पशैलंरसांजने॥विभीतकेकलिंदःस्यात्कालिज्ञेपातु
पाटला॥रंगमातातुलाक्षायामग्निज्वालातुधातकी॥त्रिनिशेस्याद्भू
स्मगर्भामधूल्यांमधुकर्कटी॥सितगुंजाकाकपीलौचंद्रापांतुगुडू
चिका॥नटश्चाशोकवृक्षेस्याद्दाडिमेफलषाडवः॥निष्पावेतुपलंक
स्यात्कलशीपृश्निपर्णिका॥राजान्नेदीर्घशूकःस्याज्जरणःकृष्णजी
रके॥पिंगाचैवहरिद्रायांश्वेतशूकेजवःस्मृतः॥श्यामाकेतुत्रिबीजः
स्यादाढक्यांतुवरीस्मृता॥प्रोक्तःश्रुकाश्मीरवृक्षोविषतिंदुर्विषद्रुमे
॥पलाशेपत्रकःप्रोक्तोन्यग्रोधोरोहिणःस्मृतः॥नारिकेलेरसफलस्त

थातालेतुशंबरः॥विकंकतोमृदुफलोकेसरेबकुलस्मृतः॥सेफाली
सिंधुवारेचहिलिमोचीतुवास्तुके॥वास्तुकेश्वेतविल्लिस्याद्देल्लिका
चेंदुयोदकी॥आरामवल्लिकायांतुमूलयोनीतुविसृता॥मृदुःकन्या
तुसंप्रोक्ताजीवास्याज्जीवकेतथा॥छिन्नायांतुगुडूचीस्यान्नाराय
ण्यांशतावरी॥सर्जेतुवल्कलकर्णीचशलाटूविल्वकेतथा॥सर्जेतरे
चाश्वकर्णोगोकर्णीसमदोरसे॥कृष्णांनीलांजनेप्राहुराखुकर्णीतु
शंबरी॥दुर्गातुश्यामयसीस्याद्रूतोमुस्ताथदुर्ग्रहः॥अपामार्गोथर
क्तातुमंजिष्टयांशठस्तथा॥धत्तूरेब्रह्मनाब्राह्मीगंधर्वःकोकिले
स्मृतः॥सरटोतुदुरारोहाबाहुल्यांतर्वरःस्मृतः॥सर्षपंतुदुराधर्षो
ह्रीबेरंबालकेतथा॥हेमवतीचाल्परसाङ्घ्रिषड्ग्रानाटरूषके॥ब्रह्म
पुत्रीतुभार्गीस्यात्थस्तिपर्णीतुकर्कटी॥तुलसीबहुभंजर्षीकट
भ्यांगर्दभीस्मृता॥ककुभ्रीहपुषायांचसाल्मलीचयमद्रुमे॥सूक्ष्मै
लाचैवकोरंग्यांगंधाण्यांधूम्रपत्रिका॥शैलजागजपिप्पल्यांसी
रिणीतुकुरुंविनी॥देवबलायांत्रायंतीकटीचवदिरेस्मृता॥इंदी
वराकरंभायांकंदेचेंदीवरंस्मृतं॥पुष्यांतरेराजकल्यांपार्थिवेत
गरंतथा॥सागरेरत्नगर्भास्यद्रत्नगर्भातुमेदिनी॥सुवर्णेकांचनं
ज्ञेयंहेमदुग्धातुकांचनी॥प्रसारिण्यांराजवलाकर्पूरेहिमवालुकः
॥हिमकर्पूरकेप्राहुर्गोशीर्षंचंदनंस्मृतं॥ब्रह्मदारुःस्मृतःफंज्यांप
र्णंधापणास्मृतः॥वत्सादनीगुरुच्यांचसोमवल्लयज्ञवल्लिका॥
नद्यांमेचसमष्ठिलाथरजनीस्यात्कालमेष्यांबुधेर्दग्धेहस्तिलके
पलांडुरितिचस्याद्दीपनेचोक्ततः॥मोचाहस्तिविषाणिकेचक
थितास्याभार्ग्यांतुपद्मेस्मृतानिवेशीर्णदलस्तथात्रकथितास्याद्ब्रा
न्यराजोपवे॥इत्येकार्थगणः॥अथद्व्यर्थाः॥सौराष्ट्रेरूचिदेचैव
संधानेचप्रस्तते॥पक्षाचकिसदीलास्ताकितवश्चोरकेशठे॥बला
काबर्हिणश्चैवमेघानंदःप्रकीर्तितः॥आकाशेअर्केगगनंजलूका
मत्कुणेस्लपः॥नासानस्तत्रयोर्नाडीकोलायांशुंडिकेकणा॥ज्वर
घ्नोछिन्नवासूकेललनाचारसर्जयोः॥मंजिष्ठायांगुडुच्यांतुकुमारी

डेकाचेपाक्यांचयवजेविजे॥सर्पीनरेपटोलेचकुलकःसमुदाहृतः॥जंतुकायांतुवास्तुकेविज्ञेयाचक्रवर्तिनी॥मधुरोजीवकेप्रोक्तामेदायांचतथास्मृता॥कर्कंधुश्चेतिसंप्रोक्तोबदरेपूतिमारुते॥वासंतीकोकिलायांतुदंत्यापुष्पंप्रचक्षते॥चंद्रावेचोत्पलंकुष्ठेकुकरश्चव्ययानपोः॥चंपचामघमागंधोहूरण्यांखदिरेक्षमा॥सिंधुपुष्पंकदंबेचवकुलेचाथलोमशा॥काकोल्यांतुवचायांचसूक्ष्मैलावेंद्रवारुणी॥ऐंद्रीगोदावरीचैवगोनर्म्यारोचनातथा॥कुसुंभोरण्यजेचैवकौसुंभकुसुमांजने॥सटीगंधनिशायांतुचोरकेचाथकर्कटी॥देवदाल्यांत्रपुस्यांचशताह्वयांशतावरी॥मिशिस्तुतुच्छनीलिन्यांसूक्ष्मैलायांतथास्मृता॥वितुन्नकंतुभूधात्र्याख्यातातुकुस्तुंबरीतथा॥बर्हिर्दर्भेमयूरेचप्लक्षमर्कटयोःप्लवः॥आखुपर्णीमृतश्रेण्यांप्रत्यक्श्रेण्यांतथास्मृता॥वस्त्रेतमालपत्रेचअंशुकःसमुदाहृतः॥दर्भेचकुशिकेवज्रंकंगुधान्येप्रियंगुके॥कंगुरंगारवल्लीतुफंजिहस्तिकरंजयोः॥वक्रपुष्पमगस्त्येवपलाशेचाश्वपुच्छकं॥माषपर्णीशुनःपुच्छेचिल्लिस्याच्छाकलोध्रयोः॥अथवाचेंद्रवारुण्यांशक्रान्हेंद्रपर्वेतथा॥काकभांडीकाकतुंड्यांख्यातारुस्तिकरंजके॥दीर्घाकुश्यांपलाशेचयाज्ञिकोथविदारिका॥काश्मरीचसृगाल्यांचटेंटोचमृगधूर्तके॥कटुकाराजपिप्पल्योःख्याताचशकुलादनी॥मंथानकेसमाख्यातोराजवृक्षस्तृणाधिपे॥मदनेकुटिलेचैवतगरंचाथरक्तिका॥गुंजायांराजिकायांचपिशुनंचापिकुंकुमे॥तगरेथयवाह्वायांयवक्षारंयवासिवा॥अंगुरोदनयोःकुरोदंतीमधुकपुष्पयोः॥मधुपुष्पीचशोफघ्नीशालिपर्ण्यापुनर्नवा॥वालपत्रोयवासेचखदिरेचाथवालके॥उदीच्यामुत्तरेदेशेकपिःकीचतुरुष्कयोः॥लांगलीदर्भयोःशीरीप्रग्रहेजलवेतसे॥व्याधिघात्योवलंगेचश्रीगंधेदिव्यचंदने॥स्वादुकंठकमाचरव्युर्गोक्षुरेचविकंकते॥वंशवीजेयवफलावत्सकेधान्यकर्कके॥आगस्त्योदेवऋषिःस्याहृचाश्वेतादिपथ्यरी॥गोलोम्यांगंजनंप्रोक्तंलसुनेवृत्तमूलके॥कंकुमेरामवेवाल्हिवालपामोदिनीभवेत्॥महासमंगनेश्वर्याज

टामांस्यांजटास्मृता॥कारीचमृगनाभौचधुत्तूरेपरिकीर्तिता॥हंस
पाद्यामुसल्यांचस्यात्तागोधापदीक्षुपैः॥तपस्वीहिंगुपत्र्यांचप्रकीर्यै
रैष्यमुक्तयोः॥तारंस्यान्माषपर्ण्यांतुलिंग्यांचाहुःस्वयंभुवं॥सहस्र
वेधीकस्तूर्यांरामवेथाम्लकेसरे॥पुंनागेतुंगमाचख्युस्त्रिवृद्धान्यवि
शेषयोः॥मसूरेप्यथविश्वायांशुंठीप्रतिविषंतथा॥श्रीगंधगंधपा
षाणेगंधसारेथपिच्छिले॥शाल्मलीशिशुवैवासावृहत्त्यौहिभका
भिधे॥मर्कटस्त्वजमोदायांवनौकापिचविश्रुतः॥स्याल्लांगुलीगुडू
च्यौतुविशल्यामथतेजिनी॥तेजोवत्यांतुमुर्वायांचांगेरीलोणशाक
योः॥लोणिकाचापिपिण्याकंतिलकिट्टंतुरुष्कयोः॥वृहत्यांचैववृंता
केवार्त्ताकींचसदाफलं॥उदुंबरेविल्ववृक्षेलज्जाखदिरवृक्षयोः॥ख
दिरेचाथसामुद्रंलवणेतुहिफेनके॥ग्रंथिभोगोक्षुरेविल्वेकटुकामी
नपित्तयोः॥मत्स्यपित्तोथरजनिहरिद्रातिलिकरम्ययोः॥मिश्रेयके
मुरल्यांचवानपत्रेथमुस्तके॥अब्देभकेश्वेतपद्मपुष्करंपौष्करेमतं
॥तुंडिकेर्यांचकार्पासेतुंडिकाचप्रशस्यते॥धुत्तूरेचविडेधूर्त्तःश्रीवे
ष्टेसूचिपत्रकः॥वृक्षधूपोहिमांशुःस्यात्कर्पूरेचप्रकीर्तितः॥जाती
फलंतुशैलूषेश्रीफलेचसितावरी॥सुचिपत्रेतुवाकुच्यांशर्करागंड
दूर्वयोः॥मत्स्यंडिकातुद्राक्षायांचाराव्दोतापसप्रिया॥फंजीतुवकुडी
चैवआजांत्र्यंतुप्रशस्यते॥अर्कावर्तेरवौसूर्यःपेयंसीरेजलेस्मृतं॥क
पूरेतुकर्केचंद्रःसौद्रेतांप्यचमाक्षिकं॥मंजिष्ठानगेरेभुंडीतूत्रुटांगु
जमुस्तयोः॥सुवर्चलंमातुलिंगेरुचकेचसुवर्चला॥अर्कावर्त्तेतुमं
डूक्यांह्रीवेरपिचुमंदयोः॥निंबोथसप्तलायांतुसप्तलानवमल्लिका॥
लांगल्यांगजपिप्पल्यांख्यातावन्हिशिखातथा॥ज्योतिष्मत्यांकाक
जंघापारावतपदीतथा॥दुरालभायवासेचयासेचसुरकोमतः॥गो
क्षुरेकोकिलाक्षेचक्षुरेगोकंटकेक्षुरः॥पुष्करेचपलाशेचसुरश्रेष्ठेप्र
कीर्त्तितः॥सोमोधान्याम्लकेसोमेप्रियामकुगनांतरे॥मुनिडुर्घेट्टकेग
स्त्येमृणालंचमुशीरके॥मुनींद्रेष्टंटुकेगस्त्येममृणालमुशीरके॥ला
मज्जकेब्रह्मरसोरक्तागस्त्येपणेशके॥वटेप्लक्षेचशृंगीस्यात्कांतारव
नवंशयोः॥भूतृणेधान्यकेछत्रमूलकेछत्रमूलके॥मूलकंचयवानी

तुदीपिकात्वजमोदयोः॥एलावालुककर्कस्यौवालुकंसीरभूरुहं॥
नाम्रेचोडंवरेचाथभूर्जेभूश्रवणीतथा॥रीत्यांपुष्पांजनेरीतिसचिवो
मंत्रिधूर्त्तयोः॥चाणवामूलकेमिश्रेशालपोथार्कसारिवे॥आस्फोता
यांतुपर्जन्योवृष्टिदारुहरिद्रयोः॥लकुचेचुक्रवास्तुकेलिकुचेथगु
णासत्ता॥दूर्वायांमांसरोहिण्यांसातलामांसरोहिणी॥उभेश्चर्मकषा
यांतुनीवारेपिचकर्वुरे॥मुनिप्रियोवरायांतुगुडचीतुविडंगके॥रसं
तुपारदेबोलोरसःपारदचर्मणोः॥भल्लूकःशुनकेरूक्षेपद्मिन्यां
नलिनीत्विभी॥किंशुकेप्रवरौख्यातौआरूकेपरिकीर्त्तिताः॥चि
त्रकेमेथिकावीजेज्योतिष्कोचाथवार्षिके॥त्रायमाणान्यपुष्पं
चमेथिकात्रित्रिमूलयोः॥वल्लरीचाथकलभेधत्तूरेचगजार्भके
॥त्रुटिनीलिकयोरेलाशिखंड्यांचमयूरके॥सुवर्णयूथिकायां
चकारवेकुचकेतथा॥कलिंगेचस्मृतश्चापखगेवायेचपक्षिणी
॥धनुर्वृक्षोधन्वनागेसस्याद्भल्लातइत्यपि॥घुटुकेखड्गशिंव्यांचश्ट
श्रुशिंव्यथचेतना॥पथ्यारुक्स्तुनिचुलेअशोकेवंजुलःस्मृतः॥
कपिकच्छ्वपामार्गेमर्कटीचान्यपक्षिणी॥भारद्वाजोभवेद्वन्य
कार्पासेचाथगुग्गुलौ॥दहनागुरौपुरेचैवप्रोक्ताथजतुपत्रिका
॥सुद्राश्मभेदेचांगेर्यामतसीशालिपर्णिका॥एकमूलातुकुंभी
स्यात्पाटलीद्रोणपुष्पयोः॥वाराहीचहरिक्रांताविष्णुक्रांताभिदा
मता॥सारंगश्चातकेरंशोशंखोवारिभवेभखे॥मांसलंतुफलेशेके
वृंताकेतुकलिंगके॥निष्पत्रिकायांवंशाग्रेकरीरंसंप्रकीर्त्तितं॥मा
षपर्ण्यांतुगुंजायांकांभोजीचाथपूतना॥गंधमांस्यांहरीतक्यांचि
त्रांगंम्लेछतालयोः॥अंकोल्लकेतुमदनेख्यातंगंधोत्कटेबुधैः॥हि
निशेशिंशुपायांतुभस्मगर्भःप्रकीर्त्तितः॥वातेमरुहदेचैवख्यातोवै
द्यैःसमीरणः॥क्षीरदुग्धेनवक्षीरेस्वथुःसुतकासयोः॥सितमंदा
रकेपुष्पविशेषेकुरवस्मृतः॥सुषवीकटुतुंब्यांचविभक्तास्थूलजी
रके॥कंटकोखदिरेप्रोक्तोवृंताकेचाथनीलिका॥सिंदुवारेतुनी
लिन्यांपिकेचैवाथकोकिला॥कोकिलाक्षेचगंधार्यापत्रीस्यात्ताय
वासिके॥चक्रांगीचैवरोहिण्यांमंजिष्ठायांप्रकीर्त्तिता॥मसूरात्रि

वृत्तायांचप्रोक्ताधान्यविशेषके॥गिरिजंगैरिकंप्रोक्तंशिलाजतुप्र
शस्यते॥चंद्रिकाचंद्रकांतौचनिर्गुंड्यांचप्रकीर्तिता॥कंजीयोत
नवल्यांतुभार्ग्यांचैवाथनीलिका॥मृगाक्षीश्रीफलीकायांमृगाक्षी
धात्रिकाफलं॥ख्याताममृतफलेचाथश्यामेक्षुःकोकिलाक्षकः॥इक्षु
रकेवक्रशल्यांकटुविंम्बांप्रचक्षते॥दंत्यांतरेविभांड्यांचप्रख्या
ताकर्त्तरीबुधैः॥अभयाचसमाख्याताहरीतक्यांमृणालयोः॥ज
तुकायांजनन्यांतुभ्रामरीचभिषग्वरैः॥गोरसेरोचनेगव्यंकार्पास्यां
चव्यचव्यके॥गोरोचनारोचनापीख्याताख्याहंशरोचना॥ज्योति
ष्मत्यांपक्षिभेदेपिंगलाचप्रकीर्तिता॥अमृतेशालिपर्ण्यांतुसुधा
चपरिकीर्तिता॥रसराजःसमाख्यातोपारदेचरसांजने॥वल्ली
करंजेसितपाटलक्यांकुबेरनेत्राथजगादमांस्यां॥मांसींहदंत्यां
लवणेमहीजेकांतायसाश्मेतुहिरोमकाख्यां॥इतिद्व्यर्थाः॥अ
थत्र्यर्थाः॥सितजेपातपत्रेचवासंत्यांमाधवीभवेत्॥ज्योतिष्म
तींकिणिसांचसुषल्यांकटभीस्मृता॥पुनर्नवेंद्रगोपेतुवर्षा
भूर्ददुरिःस्मृतः॥सुकुमारस्तुश्यामाकेचंपकेक्षवकेतथा॥स्वक्षा
तुसुकुमारायांनेपालीमालतीस्मृता॥महाबलागवाख्यांतुपु
ष्पान्यांचगवादिनी॥अरिष्टलक्रभेदेचनिंवेचलसुनेतथा॥कु
टकावंशदूर्वास्तुशतपर्वाचकिंशुका॥ज्योतिष्मत्यांपलाशेचनं
दीवृक्षोथलांगली॥हरिन्यांगजपिप्पल्यांनारिकेलेप्रशस्यते॥
कादंबेमल्लिकाख्येचशिरीषवृत्तपुष्पकः॥गिरिकर्णीद्रवारुण्यां
पिंडिन्यांचगवादिनि॥शिरीषेमधुकेदंत्यांमधुपुष्पंचवंजुलः॥
अशोकेचैवभेरण्यांनिचुलेचाथनाकुली॥सर्पाक्षासितक्षुद्रायांप
वतिक्तेथदुर्दरः॥भल्लातकेऋषभकेअनड्वाचप्रशस्यते॥मयूर
केमेथिकायांचित्रकेचभवेच्छिखी॥कदल्यामजमोदायांगजेह
स्तीतिसंज्ञकः॥अमोघापद्मभेदेस्यात्पाटल्यांचविलंगिके॥कु
ल्माषःकांजिकेवंशेगंधमाल्यांसुवस्यतः॥सोमायांमहिषीवल्लं
ब्राह्मीहेमलतास्मृताः॥वंशेस्यान्नारिकेरेचतालेचतृणराजकः
मुस्तायामभ्रकेमेघेघनश्चाथपितृप्रिया॥अगस्त्येभृंगराजेचका

लशाकेचविभृताः॥दंतशठस्तुचांगेर्यांजंवीरेथकपित्थके॥दृह
नोरुष्करंप्रोक्तोवृश्चिकाल्यांचचित्रके॥विडंगेचजयंत्यांचमोटा
यांचबलास्मृता॥आम्रातकेशिरीषेचप्लक्षेचैवकपीतनः॥कटु
हुच्यांकारवल्लीकांडीरेचीरपद्मके॥यवासेसुदूरवदिरेकार्पासेच
मरुद्भवा॥समुद्रांताचस्टक्कायांकार्पासेचयवासके॥मंडूकपर्णी
मंडूक्यांमंजिष्ठादित्यकांतयोः॥ऋषभकेयवासायांबलीवर्देवृ
षःस्मृतः॥चापेपंचंपकेप्रोक्तंकिंजल्केनागकेसरे॥उशीरेचलवं
गेचश्रीखंडेवारिसंभवे॥पलितंशैलजेश्यामेशुभ्रकेशेचविश्रुतं
॥कुंदुरुकेधूपभेदेशल्लक्यांचतृणांतरे॥एथ्वीकायांहिंगुपत्री
स्थूलेलाकलिकास्मृता॥शतपत्रेराजकीरेकमलेपुष्पभेदके॥
न्यग्रोधस्त्वाखुपर्ण्यांचभृतश्रोण्यांवटेस्मृतः॥सुद्राग्निमंथेतर्की
रीजीमूलेचाग्निमंथके॥श्वेतेकोप्येचमीनाड्यांसिताचपरिकीर्ति
ता॥सोमवल्कस्तुखोतायांकदरेकृष्णगर्भके॥शैलेयकेशिलाहृा
चकुंडल्यांचशिलाजतौ॥पाटलायांमाषपर्ण्यांकाश्मर्यांकृष्णवृं
तिका॥जटामांसीचलाक्षायांलाक्षायांचबलंस्मृतं॥समंगायांरक्त
पादीमंजिष्ठाचबलास्मृता॥भल्लातकेबिल्वतरौपार्थेवरितसः
स्मृतः॥दुःस्पर्शायांकंटकारीकपिकच्छूर्दुरालभा॥वत्सादन्यां
गुडूचीचतार्क्ष्यीचगजपिप्पली॥आमंडेपुष्करेकंजेपद्मपत्रंप्रच
क्षते॥कालेयकंतुदार्व्यांचकुंकुमेहरिचंदने॥श्रीखंडेवाजगंधे
स्यात्क्लीवेष्टेतिलपर्णिका॥लोध्रेपूगीफलेचैवतलेचक्रमुकः
स्मृतः॥पिप्पल्यांयूथिकायांचजीरकेमाधवीभवेत्॥अजमोद
शताह्वायांमिशीश्चैवशतावरी॥त्रपुस्यांकर्कटीतोसीतथास्या
हूनकर्कटी॥कुस्तुंबर्यांचभूधात्र्यांधान्यंव्रीह्यादिकंस्मृतं॥त्रपु
सीदेवदालीचघोटिकोशफलेस्मृता॥तंदुल्यांपवतिक्ताचशशां
डल्पवद्नादयोः॥सुरदादृगंधवध्वोर्व्रीडायांगंधमादिनी॥शाफे
सुकेरसुकेपिकाकासेकोकिलासकः॥वरांगंमस्तकेगुह्येत्व
चायांचप्रशस्यते॥कर्ण्पासेतकिणिह्यंचकटभ्यांगिरिकर्णि
का॥पतंगोन्यमधूकेचेत्यदृरंजनकेतथा॥द्राक्षाचशतवीर्यायांदू

र्वीचैवशतावरी॥शुंठीप्रतिविषाचैवविश्वायांचशतावरी॥जया
हरिद्राविजयाजयंत्यांचप्रशस्यते॥कच्छुरायांदुरालभास्त्वयंगु
प्तायवासकैः॥वुडूस्त्वावगोधूमैरसालेचप्रचक्षते॥द्राक्षायां
तुरसालास्याहूस्यंतेचभिषग्वरैः॥हेमवत्यांवचाश्वेतक्षीरिणी
लोमशास्मृता॥विल्वेधात्रीफलेचैवश्रीफलंचार्द्रचिक्कणे॥ति
लकेचछिन्नरुहाप्युषवेकेतकीभवेत्॥वंशःसर्जद्रुमेवेणौक
लाम्बायेचविभृतः॥सलिलेवत्सनाभेचव्यालेचैवविषंस्मृतं॥स्थू
लकंदोमुखालुःस्यात्सूरणंहस्तिकंदकं॥आम्रातकेपीतनको
अम्लिकाचपलाशिका॥विषदोड्यांमहानिंबेमदनेविषमुष्टि
कः॥तगरेकुंकुमेप्रोक्तोधूस्तूरेचशठःस्मृतः॥कपित्थकेस्वर्णयू
थ्यांकूष्मांडेनागपुष्पके॥तिलकेचातिमुक्तेचइक्षुभेदेचपुंड्रके
॥आखोटेवारुणीचैवगवाक्ष्यांचर्मवादिनी॥तोयवल्यांचकांडी
रोमहादुग्धामृतस्रवा॥दृश्यांपुनर्नवामेदाधारिणीचप्रशस्यते
॥मुचुकुंदेजयापुष्पेगणीर्यांहरिवल्लभा॥कामुकेलघुकाश्मर्यां
कैडर्यान्यकरंजके॥द्राक्षांतरेशिखरिणीनेवाल्यांदधिभेदके॥
कुटजेंद्रयवौप्रोक्तौपुष्पकासीसवत्सके॥क्षौद्रेमधानरेप्रोक्तो
मधुयष्ट्यामधुस्मृतः॥चटकेत्वरसैचैवनीलकंठेमयूरके॥शो
णितंकुंकुमेरक्तेरक्तगंधेइतिस्मृतं॥तर्कारीदेवदाल्यांचअरण्यां
सरिमंडले॥चक्रपर्यांवृश्चिकेचैवकाकवंध्यासकृत्प्रजा॥कटूंस्या
चकटभ्यांचपटोल्यांदधिपुष्पिका॥धूस्तूरेकेसरेहेम्निसुवर्णंसंप्र
चक्षते॥सुवर्णायांहरिद्रांचवारुणीकणगुग्गुलुः॥वाराह्यांशिग्रु
मार्यांचकंदभेदेचसूकरी॥पलांड्वंतरेलसुनेमूलेचाणक्यसंज्ञके
॥महाकंदःसमाख्यातोवैद्यशास्त्रार्थकोविदैः॥लोहेचवनरंभायां
लघुपाषाणभेदके॥त्रिषेतेप्यचगिरिजाप्रोक्तात्रेयभिषग्वरैः॥जर
णःकासमर्देतुरामठेकृष्णजीरके॥सप्तमंजापतेनीरंगंतगरेचप्र
शस्यते॥दुरालभायांकपिककुकेस्यात्तथाशिखर्यांदुरभिग्रहाच॥
महासमंगाबहुपुत्रिकाचसासारिवास्यात्फणिजिह्विकायां॥इति
त्र्यर्थाः॥अथचतुरर्थाः॥अम्लिकायांतुचांगेर्यांमाविकेचाम्लविंच

कै॥वयस्यायांचकाकोल्यौदार्वींचसोमवल्लरी॥जंतुकायांपत्रदा
त्र्यांषट्पद्यांभ्रमरीत्वचौ॥भ्रमरीचारकोवैद्यशास्त्रमापुष्पनेस्मृ
तः॥अभयाचिर्भिटावंध्याककोटीचमृगादनी॥पथ्यायांसंप्रवक्ष्ये
नेचनस्त्रश्चभिषग्वरैः॥कुष्ठेकुंदरुकेनिंबराजकेराजभद्रकः॥कट
केकाचवेलोहेतिलकंगंधभेदकः॥मानेस्यायांमहाराज्ञेकाकमा
च्यांमहापरं॥मीनाख्यायामहाराष्ट्र्याकाकमाच्यांतथापरं॥ब्रह्मम
डूकिकायांतुमत्स्याक्षीचंप्रचस्पते॥नक्तंचरःकौशिकेस्याहूलुले
दुंडुलेतुरे॥शिफाजगंधाकारव्यांमेथिकाचाजमोदिका॥पंचास्ये
मर्कटेचाश्वेमंडूकेचहरिःस्मृतः॥श्यामालंकांत्रिपूटायांस्थूलैला
वृत्तमल्लिका॥लोहंचलोहजेकांस्येकृष्णलोहेतथागुरौ॥खर्जूर्यां
नालिकेरेचतालेवंशेदुरारुहाः॥शुंठीमरिचपिप्पल्यांकणामूलंष
डूषणं॥अग्निस्त्वरुष्करेजारेनिंबुकेचित्रकेतथा॥भूनांकुशस्त्व
पामार्गेसुकुमारश्चराजिका॥त्वचेचास्वलेचैवप्रोक्तस्तत्रभिषग्व
रैः॥शामीहरिद्रारद्धिश्चलास्यासास्वब्रचारिणी॥जंबूकोसोमम
स्यास्त्रिक्रोडिब्राह्मिचकीर्तिता॥मार्कवेभ्रामरेभृंगस्त्वचेपस्त्रिवि
शेषके॥सेचनंस्याद्दाडिमकेजंभेनिंबेचपूरके॥सिताज्येदमने
व्याघ्रेरुग्भेदेपुंडरीककः॥जलजंमौक्तिकेशंखेलोणक्षारेलवं
गके॥वंध्याककोंटकीचैववृहत्यन्याचलक्ष्मणा॥सूत्रदापुत्र
दायांतुचतस्रश्चरिकीर्तिताः॥उशीरंगृंजनंचैवमधुपुष्पंचवं
जुलः॥दीर्घपत्रेचकेतक्यांकन्यायांदीर्घपत्रिका॥वासनेरुच
केह्यक्षःकलिंगेदेवसर्षपः॥लामज्जकेदीर्घमूलंयासेवेलंत
रेशठे॥तथास्याक्कालिपर्णीचदीर्घमूलास्मृताबुधैः॥रामार्या
त्रायमाणांचकन्यांशोकश्चसातलां॥अमृतंवेदनसारेसुधाचैव
तथाविषे॥वराहःशिशुमारेचवाराह्यांसूकरेघने॥वाराहेवंजु
लेकासेनादेयीजलवेतसे॥शारदोवकुलेराष्ट्र्यांसारिकाकृष्ण
मुद्गयोः॥कुब्जकेवार्षिकायांचफलिन्यांप्रोषितप्रिया॥काश्मी
रंकुंकुमेदेशेपौष्करेमृगनाभिजे॥केसरेवकुलेहेम्निकिंजल्केच
कसीसके॥जंबीरेस्यान्मरुवकेगुच्छेचार्जुनपुरमके॥वंध्याककों

टकीचैवईश्वर्यासप्तचस्मृते॥वसंतदूत्यांगणिकारिकाम्नवासंति
कापाटलकोकिलाच॥वत्सादनीवाकुचिकागुडूचीसोमासमंडू
किकसोमवल्ल्यां॥चक्रीनखांतरेकोकेदध्नोपितिनिसेखरे॥सिंधु
जेतिलकेधान्यांपारदेटंकणेपिच॥जातीसुरीरीकटुत्रंविनीचवि
चुंदरीरेणुसराजपुत्री॥स्वर्णेन्यथागुग्गुलुकेसराखुशठेपृथीराः
कभकंवदंति॥इतिपंचार्थाः॥अथषडर्थाः॥वृहद्दूलावरीनाली
कटुकानिविषातथा॥काकोलीचैवषड्गंवीरायांचप्रचक्षते॥
सातलाक्षीरकाकोलीचिभांडीवाजभृंगिका॥कुंजरोदुर्द्दुरश्चै
वषड्विषाणीतिकीर्तिता॥नीलुदूर्वानिशाभकुरोचनाचहरीत
की॥वृहुपुष्पीभिषग्वर्यैःशिलायांषडमीस्मृताः॥निंबखर्जूरि
तालीसंमरिचंरंतमूलकं॥पलांडुश्चेतिषडमीनिंबसंज्ञाप्रकीर्ति
ताः॥मूर्वास्टक्कासहीदेवीदेवद्रोणाचकेसरं॥आदित्यभक्ताष
डितिदेवीसंज्ञाप्रकीर्तिताः॥ब्राह्मणःक्षत्रियोवैश्योदंतोसर्पोख
गस्तथा॥द्विजद्विजन्मनाचैवदून्युक्तोसुरभिःसदा॥गवादनीचै
वदूर्वागंडदूर्वाचहस्तिनी॥प्रतीचीमदिराचेतिवारुण्यांषट्सु
संमता॥हपुषापीतनिर्गुंडीविष्णुक्रांताजयंतिका॥शितांद्रिक
र्णीशंस्यन्याषडेताअपराजिताः॥कुमार्यांचवराहीचवंध्याकर्को
टकीमृदुः॥स्थूलैलास्थूलपर्ण्याचषट्कन्याचकुमारीका॥वी
जद्रुमेनगेचैवसीसकेनागकेसरे॥विषेचपन्नगेचैवषडेतेनाग
इत्यपि॥सूक्ष्मैलाचमहाराष्ट्रीमत्स्याक्षीकाकमाचिका॥गंडदू
र्वाचमंडूकीमत्स्यादन्यांषडस्मृताः॥मेषेकलिंगेकोशाम्रेशल्य
काकेचधूर्तके॥मदनेचसमाख्याताःषडमीसमुदाहृताः॥डो
डीगुडूचीमेदांचकाकोलीहरिणीतथा॥जीवन्त्यांचैवषट्स्वेते
जीवंत्याचभिषग्वरैः॥भूम्यारभृग्योःखलुमांसनेत्रसेशिरीषकुट
जेकलिंगे॥द्राक्षाचदुर्याजरणाचचैवकृष्णाभिधावाकुचिकाप
टुश्च॥इतिषडर्थाः॥अथसप्तार्थाः॥भद्रापांगुबलानीलीदंतीका
श्मीरसारिका ॥ श्वेताद्रिकार्णीगौरीचसप्तचैताभिषग्वरैः॥मंजि
ष्ठाकटुकापथ्याकश्मीरीचंद्रवल्लभा॥वंदाकोरजनीचैवरोहिण्यां

सप्तचस्मृताः॥धात्रीबहुफलायांस्याच्छिदिनीकाकमाचिका॥कां
भोजीचशंशंाङ्गुलीकटुहुंचीचवालुकी॥मंडूकीब्रह्मजाशंखपुष्पी
ज्योतिष्मतीमुनिः॥विष्णुक्रांतावचाश्वेतामेध्यायांसप्तसंमती॥
आखुकर्णीसूतस्त्रेणीइंद्राह्वाचकलिंगकः॥गंडदूर्वागवाक्षीच
सिमास्युद्राहंरीतकी॥इतिसप्तार्थाः॥विजयाकांचनहंहूंमंजिष्ठा
चवचातथा॥स्यात्तथाश्वेतनिर्गुंडीजयंत्याकांजिकाभया॥एरं
डनद्यामलताकरंजस्याद्बह्मदंडीपनसःकुसुंभः॥स्याद्रोणुरः
कटफलेचधूर्तोभिषग्भिरष्टाविनिसंप्रदिष्टाः॥स्वर्णेकपित्थेदधि
नालिकेरयोस्याज्जीवकेचेतस्थलपद्मकेतथा॥मसूरकेतोसम
धूककेनथामांगल्यमष्टाविनिसंप्रचक्षते॥इत्यष्टार्थाः॥अथन
वार्थाः॥वातारिजंतुकायांचभल्यांमीलदवंजयोः॥टेंठुकामंड
योर्भार्ग्योर्निर्गुंड्यांसूरणेस्मृताः॥धात्रीगुडूचीराष्णाचद्विधादू
र्वाहरीतकी॥लिंगिनीतुवरीमद्यंधीमतायांनवौषधी॥ब्राह्मी
वराहीलसुनीविषंचशृंगाद्विकंदःसितकंटकारी॥भूम्यांहुली
चेदपराजिताचशुंठीतिचेत्तासुमहौषधीस्यात्॥इतिनवार्थाः॥
अथदशार्थाः॥स्यादभ्रमांसीतुलसीहरिद्रातालुनथारोचनहेम
मोचाः॥जनप्रियांयोजनवल्लिकास्यासामल्लिकाचंद्रशशीचगो
र्यो॥सितापांवाकुचीदूर्वामद्यंधात्रीकुटुंविनी॥चंद्रिकाचप्रिया
पिंगात्रायमाणाचतेजिनी॥इतिदशार्थाः॥अथैकादशार्थाः॥दू
र्वानिशाऋद्धिवचाप्रियाचसामाषपर्णीशिमिरोचनात्वथ॥त्रायं
तिकीजीवतिकामहाबलामंगल्यकायामितिचंद्रमाहूयाः॥प्रियं
गुच्छिन्नात्रिवृताकणाहूयावंदाकदूर्वातुलसीचनीलिनी॥दुर्गाख
ग.कस्तुरिकृष्णसारिवाश्यामामहीदीपकयितामिषग्वरैः॥इति
एकादशार्थादि॥एतेद्वादशार्थाः॥इतिएकार्थादिएकादशार्थाः॥
इतिकाश्मीरमंडलप्रसिद्धवसतिश्रीमठसिद्धागुहाक्षस्थानस्थि
तश्रीनंदिक्षेत्रप्रसिद्धमहिमानंदश्रीसोमानंदआचार्यवंशोद्भ
वचतुर्दशविद्याविनोदपरिणतसमागमहिजवैराग्ययोगपश्रीपरम
हंसजगदविज्ञानतिमिरमार्तंडश्रीचंडेश्वरापरनामधेयश्रीराजरा

जेंद्रगिरिश्रीपादपद्मसर्वशास्त्रमकरंदामोदमुदितसद्वैद्यविद्या
विशारददासविशारदमानसंहितारिधुरंधरनानाधनाग्रहणस
त्वगुणसहजश्रीमदीश्वरसूरिसूनुश्रीमदमृतेशानंदचरणार
विंदमकरंदानंदोदितश्रीनरहरिपंडितविरचितेनिघंटुराजापर
पर्यायवत्यभिधानचूडामणौचैकार्थाद्यभिधानस्त्रयोविंशोवर्गः॥

## निघंटुराजस्यसूचीपत्रं ॥